ॐनमश्चित्सूर्याय ॥ ॐप्रुणान्देगानमृत
विसरैरिन्दुमाहात्म्य सम्यग्भाभिः स्वाभी
रसयति रसं यः परं नित्यमेव । क्षीणं
क्षीणं पुनरपि च तं पूरयत्येवमीदृग्दो
सां लालीलोल्लसितहृदयं नौमि चिद्भानु
१ मेकम् ॥ १ ॥ शब्दार्थत्वविवर्तमानज्योति
परम्

ऋचो गोपतेर्हृद्गी घोऽभ्युदितः पुरोहण

तया यस्य त्रयीमण्डलम्। भालद्दूत्प

दक्रमेरिततमः सप्तस्वरामैर्दिपाद्दिया

स्यान्तन मुन्नयन्निव नमस्तस्मै परब्रह्म

णे ॥२॥ ओमित्यन्तर्नदति नियतं यः

प्रतिप्राणि शब्दो वाणी यस्मात्प्रसरति

परा शब्दतन्मात्रगर्भा। प्राणापानौ वहन्ति

च समौ यो मिथो ग्रासग्रस्तौ देहस्थं तं स

पदि परमादित्यमाद्यं प्रपद्ये ॥ ३ ॥ यस्त

त्वचक्षुः श्रवणरसनाघ्राणपाण्यङ्घ्रिवा

सां णीपायूपस्थस्थितिरपि मनो बुद्ध्यहङ्का

२ रमूर्तिः। तिष्ठन्नन्तर्बहिरपि जगद्भा

स्वयं द्वादशात्मा, मार्तण्डं तं सकलकर

णाधारमेकं प्रपद्ये ॥ ४ ॥ या सा मित्रा-

वरुणसदनादुच्चरन्ती त्रिषष्टिं, वर्णानन्तः

प्रकटकरणैः प्राणसंगात्प्रसूतान् । तां

पश्यन्तीं प्रथममुदितां, मध्यमां बुद्धिसं

स्थां, वाचं वक्त्रे करणविशदां, वैखरीं च

प्रपद्ये ॥५॥ ऊर्ध्वाधःस्थान्यतनुभुवना,
न्यन्तरा संनिविष्टा, नानानाडिप्रसवग
हना, सर्वभूतान्तरस्था । प्राणापानग्र
सननिरतैः, प्राप्यते ब्रह्मनाडी, सा नः
सं संप्रीता भवतु परमादित्यमूर्तिः प्रसन्ना
३ ६॥ न ब्रह्माण्डव्यवहितपथा, नातिशी

नोग्रा रूपा, नो वा नक्तं दिवगमभिता,
तापनीया पराह्नः । वैकुण्ठीया तनुरिव
रवे, राजते मंडलस्था, सा नः श्रुता भव
तु परमादित्यमूर्तिः प्रसन्ना ॥८॥ यत्रा-
रूढं त्रिगुणवपुषि, ब्रह्म तद्विद्धि रूपं, यो-
गीन्द्राणां यदपि परमं, भाति निर्वाणमा

71

र्गः । त्र्यध्याधारः प्रणव इति यन्मंडलं

चंडरश्मेरन्तः सूक्ष्मं बहिरपि बृहन्मुक्त

ये तत्स्वपदे ॥ ८ ॥ यस्मिन् सोमः सुर

पितृनरैरन्वहं पीयमानः क्षीणः क्षी

सं णः प्रविशति यतो वर्धते चापि भूयः ।

४ यस्मिन्वेदा मधुनि सरघाकारबद्धान्ति

त्राग्रे तत्त्वएडांशोरमितममृतं मएडलस्थं

प्रपद्ये ॥ ९ ॥ ऐन्द्रीमाशां पृथुकवपुषा

पूरयित्वा क्रमेण क्रान्ताः सप्त प्रकारैः

रिणा येन पादेन लोकाः । कृत्वा धा

न्तं विगलितबलिव्यक्षिपातालमूलं लीनं

बिम्बालोकः स जयति रविः सत्त्वमेवो

धिरश्मिः ॥१०॥ ध्यात्वा ब्रह्म प्रथममत

नु प्राणमूले नदन्तं, दृष्ट्वा चान्तः प्राण

वमुखं व्याहृतीः सम्यगुक्त्वा । यत्तद्ब्र

दे नद्विति सवितुर्ब्रह्मणो नो वरेण्यं

स्तो नर्ग्गाख्यं किमपि परमं धामगर्भ

प्र प्रपद्ये ॥११॥ त्वां स्तोष्यामि स्तुतिभिरि

ति मे, यस्तु भेदग्रहोऽयं, सैवाविद्या
तदपि सुतरां, तन्मुदासाय युक्तः ।
सौम्ये वाहं त्रिविधमुदितं, स्थूलसूक्ष्मं
परं वा, विद्योपायः पर इति बुधैर्, गीय
ते खल्वविद्या ॥ १२ यो ऽनाद्यन्तोऽप्य-
नन्तुरगुणो, णोरणीयान्महीयान्, विश्वा

कारः सगुण इति वा, कल्पनाकल्पि

ताङ्गः। नानाभूतप्रकृतिविकृतीर्दर्शं

यन्भाति यो वा, तस्मै तस्मै भवतु परमा,

दित्य नित्यं नमस्ते ॥ १३ ॥ तत्त्वाख्या

सां ने त्वयि मुनिजना, नेति नेति ब्रुवन्तः

६ श्रान्ताः सम्यक् त्वमिति च न नैरीह

२

12

ष्णो वेत्ति चोक्तः। तस्मात्तुभ्यं नम इति
वचोमात्रमेवास्ति वक्तुं, प्राग्यो यस्मा
त्प्रसरतितरां भारती ज्ञानगर्भा ॥ १८

सर्वाङ्गीनः सकलवपुषामन्तरे यो
न्तरात्मा, निष्पन्काष्ठे दहन इव नो,
दृश्यसे युक्तिमन्यैः। यस्य प्राणान्

णिषु नियतैर्मथ्यमानाद् महद्भिर्दृश्यं
ज्योतिर्भवसि परमादित्य तस्मै नमस्ते॥
स्तोता स्तुत्यः स्तुतिरिति भवान्कर्तृकर्म
क्रियात्मा, क्रीडत्येकस्तव नुतिविधाव
सां स्वतंत्रस्ततोऽहम्। यद्वा वच्मि प्रणय
८ सुभगं, गोपते तच्च तथ्यं, त्वत्तो ह्यन्यत्कि

मिव जगतां विद्यते यन्मृषा स्यात् ॥
ज्ञानं नानाः करणरहितं विद्यतेऽस्म
द्विधानां तं चात्मनं सकल करण गो
चरत्वादचिन्त्यः । ध्यानातीतस्त्वमिति
न विना भक्तियोगेन लभ्य स्तस्माद्भक्तिं
शरणममृतप्राप्तयेऽहं प्रपन्नः ॥ ८

हार्दं हंति प्रथममुदिता यः नमः स

श्रितानां, सत्त्वोद्रेकान्तदनु च रजः कर्म

योगक्रमेण। स्वभ्यस्ता च प्रथयति

तरां, सत्त्वमेव प्रपन्ना, निर्वाणाय (प्रस

सां पतिनतां) व्रजति धामिनां, तेऽर्थं भक्ति

८ श्चयीव ॥१८ नामासाद्य श्रियमिव

गृहे कामधेनुं प्रवासे, ध्याने भांति धृ
तिमिव वने, योजने ब्रह्मनाडिम् । नावं
चास्मिन्विषमविषयग्राहसंसारसिंधौ
गच्छेयं ते परमममृतं, यत्र शीतं न
चोष्णम् ॥१९ अग्नीषोमावखिलजग
तः कारणं तौ मयूखैः, सर्गादाने सृज-

सि भगवद्भासवृद्धिक्रमेण । तावेवा
न्विषुवति समौ, जुह्वतामात्मवह्नौ
द्वावप्येतौ नयसि युगपन्मुक्तये भक्तिभा
जाम् ॥२०॥ स्थूलत्वं ते प्रकृतिगहनं
सो नैव लक्ष्यं ह्यनन्तं, सूक्ष्मत्वं वा तदपि
१ सदसद्भक्तिभावादचिन्त्यम् । ध्यायामि

स्थं कथमविदितं, त्वामनाद्यन्तमन्त

स्तस्माद्वक्ष्ये प्रणयिनि मयि, स्वात्मनैव

प्रसीद ॥२॥ यत्तद्वेद्यं किमपि परमं श्री

वृतत्वं त्वमन्तस्तत्स्वाक्षिं जिगमिषु

ध्यानैर्लीनैः मात्राः कलाः स्वे । अव्यक्ते

न प्रणववपुषा, बिंदुनादोदितं सच्चिद

ब्रह्मोच्चरति किरणव्यंजितं वाचकं तं ॥
प्रातः संध्याहरणकिरणभागकुंकुमाभं ग
जसं यन्मध्ये चापि ज्वलदिव यजुः श्रु
लभाः सात्विकं वा। सायं सामास्तमि
सां नकिरणं यत्तमोल्लासिरूपः साम्न्ः सर्ग
१० स्थितिलयविधानाकृतिस्ते त्रयीव ॥२३

ये पातालोदधिमुनिनगद्वीपलोकाधि
बीजस्कन्धोभूताः स्वरमुखनदत्सप्तसप्तिं
प्रपन्नाः। ये चैकाग्र्यं निरवयववाग्भाव
मात्राधिरूढं, ते त्वामेव स्वरगुणकला
वर्जितं यान्त्यनन्तम्॥२८ दिव्यं ज्योतिः
सलिलपवनैः पूरयित्वा त्रिलोकीमेकी

भूतं पुनरपि च तत्सारमादाय गोभिः ।
अन्तर्लीनो विशति वसुधां तद्गतः श्रूयते
ऽन्नं । तच्च प्राणास्तमिति जगतां प्राणभृत्स्व
ये आत्मा ॥२५॥ अग्नीषोमौ प्रकृतिपुरु
षौ बिंदुनादौ च नित्यौ प्राणापानौ श्रपि
॥ दिननिशे ये च सन्यानृते द्वे । धर्माधर्मौ

सदसदुभयं, योगान्नावेश्य योगी वर्त्तेतात्म
न्युपरतमतिर्निर्गुणं त्वां विशोन्तः ॥ २८
गर्भाधानप्रसवविधये, सन्नयोर्बिन्दुभासा
सापत्न्येनाभिमुखमिव ते, कान्तयोर्मध्य
संस्थः । द्यावापृथ्व्योर्वदनकमले, गोमुखे
वैधयित्वा, पर्यायेण पिबसि भगवन् षड्

सास्वादलोलः ॥२७॥ सोमं पूर्णामृतमि
व चरुं तेजसा साधयित्वा कृत्वा तेनान-
लमुखजगतर्पणं वैश्वदेवम्। आमावस्यं
विघसमिव स्वे तत्कलाशेषमन्नमश्ना
सो एडानन्तर्गृहपतिरिव स्वात्मयागं करोषि ॥
१२ कृत्वा नक्तंदिवमिव जगद्बीजमाद्यक्तिकं

यत्नैवान्तर्दिनकर तथा, आह्नमत्यन्त
नोल्पम् । दैवं पित्र्यं क्रमपरिगतं, मानु
षं चात्मभृत्यं, कुर्वन्कुर्वन्कलयसि ज
गत्पंचधावर्तनाभिः ॥२९ तत्त्वालोके
तपन हरिते, ये परं संप्रबुद्धा, ये वा वि-
द्योपशमरजनी, योगनिद्रामुपेताः ।

25

तैः ह्लोसाज्ञोपरमपरमानन्दसंध्यास्यु सौरं
भित्वा ज्योतिः परमपरमं,यान्ति निर्वाण
संज्ञम् ॥ १० ॥ आब्रह्मेदं नवभिव जगज्जं
गमस्थावरान्तं, सर्गे सर्गे विसृजसि रवे
सा गोभिर्हृद्भिक्सोमैः । दीप्तैः प्रत्याहर
१२ सि च लये, तद्यथायोनि भूयः, सर्गान्ता

द्रौ प्रकटविभवां, दर्शयन् विश्वलीलाम् ॥
श्रित्वा नित्योपचितमुदितं, ब्रह्मतेजः
प्रकाशं, रूपं सर्गस्थितिलयमुचा, सर्व
भूतेषु मध्ये । अन्तेवासिष्विव सुगुरु
णा, यः परोक्षः प्रकृत्या, प्रत्यक्षोऽसौ
जगति भवता, दर्शितः स्वात्मनात्मा ॥ ३२

लोकाः सर्वे वपुषि नियतं, ते स्थिता
स्त्वं च तेषामेकैकस्मिन्युगपद्गुणो
विश्वहेतोर्गुणीव। इत्थंभूते भवति भ
गवन्न त्वदन्योऽस्ति सत्यं, किं तु सत्त्वं
सो परमपुरुषोऽहं प्रकृत्यैव चान्तः ॥३३

१४ संकल्पेच्छाद्यखिलकरणप्राणवाणी

28

वोरण्याः, संपन्नं मे त्वदभिनवनाज्जन्म
चेदं शरण्यम्। मन्ये चास्तं जिगमिषु
शनैः, पुण्यपापद्वयं तद्भक्तिस्रष्टे तव
चरणयोरन्यथा नो भवेताम्॥ ३४
सत्यं भूयो जननमरणे, त्वत्प्रपन्नेषु
न स्तस्तत्राप्येकं तव नुतिफलं, जन्म

29

याचे तद्दित्यम्। त्रैलोक्ये यः श्याम

इव परः पुण्यकायोऽप्ययोनिः, संसा

राब्धौ प्लव इव जगत्तारणाय स्थितः

स्याम् ॥२४॥ सौषुम्णेन त्वममृतपथे

सा नैत्य शीतांशुभावं, पुष्णास्यग्रे सुरानपि

२५ तनूत्थाभिः शान्तभाभिः कलाभिः। पश्चा

दम्भो विशसि विविधा, स्तोयधीस्तन्
तोपि, प्रीणास्येवं त्रिभुवनमत, ले जग
न्मित्रतार्क ॥ ३६ मन्दाक्रान्ते नमसि
भवता, नाथ दोषावसाने, नानालीला ना
मम मतिरियं, गाढनिद्रां जहाति । तस्मा
दृत्तंगमितनमसा, पद्मिनीवात्मभासा

सौरीत्येषा दिनकर परं नीयतामाशु
बोधम् ॥ ३७ ॥ येनाग्रासीकृतमिव जं
गत्सर्वमासीत्तदस्तं ध्वान्तं नीत्वा पुन
रपि विभो नह्याघ्रातचित्तः । धन्यै
सां नक्तंदिनमपि गतौ भुञ्जकष्वो विभज्य
१८ त्राता नस्माद्भव परिभवे दुष्कृते मेऽपि

भानो ॥३८ आ संसारोपचितसदसत्क
र्मबंधाश्रितानामाधिव्याधिजननमर
णक्षुत्पिपासार्दितानाम्। मिथ्याज्ञान
प्रबलतमसा नाथ चान्धीकृतानां
त्वं नष्टाज्ञा भव करुणया यत्र तत्र
स्थितानाम् ॥३९ सत्यासत्यस्वलि

नवचसां, शौचलज्जोज्झितानाम्,
नानामृफलसफलप्रार्थनाकातराणा
म्। सर्वविद्यास्वखिलविषयाभ्यस्त
कौतूहलानां, त्वं नह्याता भव पितृत
सां या, भोगलोलार्भकाणाम्॥४० याव
१४ देहं जरयति जरा, नान्तकादैत्य दूती

नो वा भीमद्विफणभुजगाकारदुर्वार
पाशः। गाढं कंठे लगति सहसा
जीवितं लेलिहाना, तावद्भक्ताभयद
सदयं, श्रेयसे नः प्रसीद ॥४१ विम्ब
प्राणग्रसनरसनाटोपकोपप्रगल्भं, मृ
त्योर्वक्त्रं, दहननयनोद्दामदंष्ट्राकरा

लम्। यांवदृष्ट्वा व्रजति न भिया, पंच
तामेष कायस्तादनित्यामृतमयरवे
पाहि नः कान्दिशीकान्॥ ४२ प्रावृ

कारं वियदिव वपुस्ते यजुः सामधा
सां मः, समस्तच्छन्दांस्यपि चतुरगा, ऋङ्म
१८ यं मंडलं च। एवं सर्वश्रुतिमयतया.

मद्ध्यानुग्रहाद्वा, क्षिप्रं मन्त्रः कृपणक
रुणाक्रन्दमाकर्णयेमम्॥ ८२ नाशं ना
स्मत्करणधारणा, यान्त्यपि ग्रस्यमाना, दे
वैरिस्थं स्थितमिव यशो, दर्शयन्स्त्वं त्रिलो
कानाम्। मन्ये सोमं स्ततनुममा, गर्भ
दृष्ट्या। बिबस्थस्थक्रच्छायां नयसि स्थान

कैः स्वां सुषुम्नां शुभा सा ॥ श्वासां जन्म
प्रभृति भवतः सेवनं नह्नि लोके, याच्यं
केनापरिमितफलं भुक्तिमुक्तिप्रकारम् ।

ज्योतिर्मात्रं स्मृतिपथमितो जीविता
सां न्तेऽपि भास्वन्निर्वाणाय प्रभवति सतां
१६ तेन ते कः समोऽन्यः ॥४२ स्वप्रत्यक्ष

त्रिदशभजनाद्युत्पन्नोक्तं फलं तत्त्वस्सां पु
क्कं भवति हि समं, कारणेनैव कार्यम्।
अत्यन्तस्त्वं सकलजगतां यत्समस्तं
फलं मे, मुमुक्षोः समुचितमतस्त्वं
याचे यथा त्वाम् ॥४६ ये चारोग्यं दिश
ति भगवान्सेवितोऽप्येवमाहुस्ते तत्त्वज्ञा

जगति सुभगा भोगयोगप्रधानाः। भुक्तेर्मुक्तेरपि च जगतां यत्र पूर्णं सुखानां
तस्यान्योऽर्कादमृतवपुषः को हि नाम्नास्तु दाता ॥४७॥ हित्वा हित्वा गुरुचपलसौं
तामप्यनेकान्निजार्थान्नैरेकाकीकृत
२०९ मिव भवत्सेवनं मन्त्रिमार्थम्। तेषामिच्छा

स्युपकृतिमहं स्वेन्द्रियाणां प्रियाणामा
दौ तस्मान्मम दिनपते देहि तेभ्यः प्र
सादम् ॥ ४८ ॥ किं तन्नामोच्चरति वचनं
यस्य नोच्चारकल्पं किं वा वाच्यं सक
लवचसां विश्वमूर्ते न यत्त्वम् । यस्मा
दुक्तं यदपि तदपि त्वत्स्तुतौ भक्तियो

गाढ़ृष्टाभिसन्धवन्तु भगवंस्त्वत्प्रसादेन

धन्यम् ॥ ४९ या पन्थानं दिशति शि

शिराद्दुत्तरं देवयानं या वा कृष्णं पि

तृयाणमथो दक्षिणं प्राहुडार्यम् । ता

सं भ्यामन्या विश्वबद्दभिज्ञिन्नध्यमाक्र

२१ तिमन्या, धन्या काचित्प्रकृतिपुरुषा

वन्तरा मेऽस्तु वृत्तिः ॥ ५० स्थित्वा किंचि
न्मन इव पिबन्शेतुबंधस्य मध्ये, प्राप्यो
पेयं ध्रुवपदमघो, अक्षमुद्रात्य तालुस्
त्यादूर्ध्वं किमपि परमं, व्योम सोमाग्नि
भून्यं गच्छेयं त्वां स्मरपितृगती, चान्तरा
ब्रह्मभूतः ॥ ५१ सर्वात्मत्वं सवितुरिति

यो वाङ्मनः कायवृत्त्या रागद्वेषोपशाम
समता योगमेवाहरन्तुः । धर्मोधर्मं ग्रसन
रचनामुक्तये युक्तियुक्तां स श्रीसाम्बः
स्तुतिमिति रवेः स्वप्रतिष्ठां चकार ॥
सां २१ ॥ भक्तिश्रद्धाद्यखिलनरणीवल्लभे
२२ नेदमुक्तं श्रीसांबेन प्रकटगहनं स्तोत्र

मध्यात्मगर्भम् । यः सावित्रं पठति
नियतं, स्वात्मवत्सर्वलोकान्, पश्यन्सो
ऽन्ते व्रजति मुकुरवन्मण्डलं चण्डरश्मेः ॥
५२ ॥ इति परमरहस्यश्लोकपंचाशिके
षा तपनभवनपुण्या, सागमब्रह्मचर्या ।
हरतु दुरितमस्मद्वर्णिताकर्णिता वो ।

45

दिशातु च शुभसिद्धिं मान्तवद्धक्षिमा
जाम् ॥ इति शिवम् ॥

सां॰
२३

ॐ नमः शिवाय ॥ ॐ संग्रहेण सुख
दुःखलक्षणं, मां प्रति स्थितमिदं शृणु
प्रभो । सौख्यमेष भवता समागमः
स्वामिना विरह एव दुःखिता ॥१॥
अन्तरप्यतितरामणीयसी, या त्वदप्र
थनकालिकास्ति मे । तामपीश परि
मृज्य सर्वतः, स्वस्वरूपममलं प्रकाशय ॥२

तावके वपुषि विश्वनिर्भरे चित्सुधा
रसमये निरत्यये । तिष्ठतः सतत
मर्चतः प्रभुं, जीवितं मृतमथान्यद
स्तु मे ॥ ३ ईश्वरोहमहमेव रूपवान्पंडि
तोऽस्मि सुभगोऽस्मि कोऽपरः । मत्समो
सं १ ऽस्ति जगतीति शोभते, मानिता त्वदनुरा
गिणः परम् ॥ ४

देवदेव भवदद्वयामृताख्यातिसंहरण
लब्धजन्मना। तद्यथास्थितपदार्थ
संविदा, मां कुरुष्व चरणार्चनोचितम्॥५
ध्यायते तदनु दृश्यते ततः, स्पृश्यते
च परमेश्वरः स्वयम्। यत्र पूजनम
होत्सवः स मे, सर्वदास्तु भवतोऽनुभावतः॥

तावके वपुषि विश्वनिर्भरे चित्सुधा
रसमये निरत्यये । तिष्ठतः सतत
मर्चतः प्रभुं, जीवितं मृतमथान्यद
स्तु मे ॥ ३ ईश्वरोऽहमहमेव रूपवान्पण्डि
सं तोऽस्मि सुभगोऽस्मि कोऽपरः । मत्समो
१ स्ति जगतीति शोभते, मानिता त्वदनुरा
गिणः परम् ॥ ४

देवदेव भवदद्वयामृताख्यातिसंहरण
लब्धजन्मना । तद्यथास्थितपदार्थ
संविदा, मां कुरुष्व चरणार्चनोचितम् ॥५
ध्यायते तदनु दृश्यते ततः, स्पृश्यते
च परमेश्वरः स्वयम् । यत्र पूजनम
होत्सवः स मे, सर्वदास्तु भवतोऽनुभावतः ॥

यद्यथास्थितपदार्थदर्शनं युष्मदर्चन
महोत्सवश्च यः। युग्ममेतदितरेतरा
श्रयं भक्तिशालिषु सदा विजृम्भते ॥ ७

तत्तदिन्द्रियमुखेन संततं युष्मदर्चनर
सं सायनासवम्। सर्वभावचषकेषु पूरि-
२ तेष्वपिबन्नपि भवेयमुन्मदः ॥ ८ ॥

अन्यवेद्यमणुमात्रमस्ति न स्वप्रकाश-
मखिलं विजृम्भते । यत्र नाथ भवतः
पुरे स्थितं तत्र मे कुरु सदा तवार्चितुः ॥
दासधाम्नि विनियोजितोऽप्यहं स्वेच्छ-
यैव परमेश्वर त्वया । दर्शनेन न कि-
मस्मि पात्रितः पादसंवहनकर्मणापि वा ॥

6

शक्तिपातसमये विचारणं, प्राप्तमीश

न करोषि कर्हिचित्। अद्य मां प्रति कि

मागतं यतः, स्वप्रकाशनविधौ विलम्ब

से॥११॥ तत्र तत्र विषये बहिर्विभान्त्य

सं न्तरीश परमेश्वरीयुतम्। त्वां जगत्त्रित

२ यनिर्भरं सदा, लोकयेय निजपाणिपू

जितम् ॥ १२ स्वामिसौधमभिसंधिमा
त्रतो निर्विबंधमधिरुह्य लीलया ।
स्यां प्रसादपरमामृतासवापानकेन
परिलब्धनिर्वृतिः ॥१३ यत्समस्त
सुभगार्थवस्तुषु स्पर्शमात्रविधिना चम
त्कृतिम् । तां समर्पयति तेन ते वपुः

पूजयन्त्यचलभक्तिशालिनः ॥ १४
स्फारयस्यखिलमात्मना स्फुरन्विश्व
मामृशसि रूपमामृशन् । यत्स्वयं निज
रसेन घूर्णितं तत्समुल्लसति भावमं
सं डलम् ॥ १५ यो विकल्पमिदमर्थमंडलं
४ पश्यतीश निखिलं भवद्वपुः । स्वात्म

पन्नपरिपूरिते जगत्त्रयस्य नित्यमवि
नः कुतो भयम् ॥ १६ कंठकोणविनि
विष्टमीश ते, कालकूटमपि मे महामृ
तम् । अप्युपात्तममृतं भवद्वपुर्भेदवृ
त्ति यदि रोचते न मे ॥ १७ ॥ त्वत्प्रलाप
मयरक्षगीतिका नित्ययुक्तवदनोपशो

मितः। त्वामथापि भवदर्चनक्रिया प्रेय
सी परिगताशयः सदा॥१८ ईहितं न
वत पारमेश्वरं शक्यते गणयितुं तथा
च मे। दत्तमप्यमृतनिर्भरं वपुः स्वं
सं न पातुमनुमन्यते त्वया॥१९॥ त्वाम
२ गाधमविकल्पमद्वयं स्वस्वरूपमखि

लार्धघस्मरम् । आविशन्नहमुमेश
सर्वदा पूजयेयमभिसंस्तुवीय च ॥
२०॥ इत्युत्पलस्तोत्रावलौ संग्रहस्तो
त्रे त्रयोदशम् ॥ १३ ॥

ॐ नमः शिवाय ॥ ॐ अतिभीषणक
टुभाषण यमकिंकरपटले कृतताड
नपरिपीडनमरणागमसमये। उमया
सह मम चेतसि यमशासन निवस
न् शिवशंकर शिवशंकर हर मे हर
दुरितम् ॥१॥ अतिदुर्नय चटुलेन्द्रिय

रिपुसंचयपदलिते कलिविग्रहभवदु

र्गेह नृपदुर्बलसमये। द्विजसाक्षिपव

नि पविकर्कशकटुजल्पितखलग

र्हणाचलिते। शिवया सह मम चेत

शि. सि शशिशेखर निवसन् शिवशंकर

१ शिवशंकर हर मे हर दुरितम् ॥२

भवभंजन सुररञ्जन खलवंचन परह
न् दनुजान्तक मदनान्तक रविजान्तक
भगवन् । गिरिजावर करुणाकर पर
मेश्वर भयहर शिव शंकर शिवशं
कर हर मे हर दुरितम् ॥३॥ शक्र
शासन कुनुशासन चतुराश्रमविष

ये कलिविग्रह भवदुर्गहन्नपदुर्वेल
समये। द्विजक्षत्रियवनिताशिशुदर
कंपितहृदये शिवशंकर शिवशंकर
हर मे हर दुरितम्॥ ४ इति शिव
स्तोत्रं समाप्तम्॥ गिरिपालक रुद्राहृके
2 स्वरनायकमलहर वृषभासन कमलास
न दनजाहन शिवभूः ततपाषणा कृतदो
षण भवपोषणभयहृन् शिवशंकर॥ ५॥

ॐ नमो भगवत्यै ॥ छन्दः पादयुगा नि
रुक्तिसमुखा, शिक्षाद्विजंघायुगा व्या
करोरुयुगा प्रशस्तजघना, या सामवे
दोदरा । तर्केन्यायकुचा श्रुतिस्तनयो,
काव्यादिदिव्याननो, वेदान्तामृतलो
चना भगवती, श्रीराजराज्ञेश्वरी ॥ १ ॥

कल्याणायुतपूर्णबिंबवदना, पूर्णेश्व
री नंदिनी, पूर्णा पूर्णतरा परेशमहिषी,
पूर्णामृतास्वादिनी। संपूर्णा पुरुषोत्त
मामृतकला, विद्यावती भारती, श्रीच
रा. क्रप्रियबिंदुतर्पणपरा, श्रीराजराजे
३ श्वरी ॥ २ ॥

3

ईशादीश्वरयोगवृन्दविदिता, स्वानन्द
भूता परा, पश्यन्ती तनुमध्यमा विल
सिनी, श्रीवैखरीरूपिणी। आत्मानात्म
विचारिणी त्रिनयना, विद्या त्रिबीजा
त्मयी, श्रीचक्रप्रिय० ३ एकाकारम
नेकवर्णविविधाकारैकचिद्रूपिणी, चै

तन्मात्मका एकचक्ररचिता, चक्राङ्गा ए

काकिनी। भावाभावविभाविनी भयह

रा, सङ्कल्पचिन्तामणिः श्रीचक्रप्रिय॰

४॥ लक्ष्यालक्ष्यविवेकिनी निरुपमा,

रा॰ रुद्राक्षमालाधरा, साक्षात्कारणदक्षतां

४ प्राकलिता, दीर्घातिदीर्घेश्वरी। भद्रा

भद्रवरप्रदा भगवती, भद्रेश्वरी भद्रिणी, श्री
चक्र० ५॥ ह्रीं बीजानन्तनादबिंदुपरमा,
ओंकारनादात्मिका, ब्रह्मानन्दघनोदरी
गुणवती, ज्ञानेश्वरी ज्ञानदा। इच्छाज्ञान
क्रियावती गुणावती, गंधर्वसंसेविता, श्री
चक्र० ६॥ हूँबीजानन्तहुवर्णपात्रभरिता,
पानोन्मत्ता स्वरूपिणी, हूँकारप्रियशब्दब्रह्म

6

निरता, सारस्वतोल्लासिनी। सारासारवि

चारचारु निरता, वर्णाश्रमाकारिणी; श्रीच

क्र. ६ सर्वज्ञानकलावती सकलगा, सन्ना

दिनी नन्दिनी, सर्वान्तर्गतशालिनी शिव

ननु संदीपिनी दीपनी। संयोगप्रियरूपिणी

१ प्रियवती, प्रीता प्रतापोन्नता श्रीचक्र. ९॥

२ कर्माकर्मविवर्जिता कुलवती, कर्मप्रदा

7

कौलिनी कारणभावविधिसर्वकर्मनिरता सिं
धुप्रिया शालिनी। पंचब्रह्मसनातनी मुह
गतिर्ज्ञेया च योगात्मिका श्रीचक्र० ९॥
हस्तिकुंभनिभपयोधरयुगा पीनोन्नता
नम्रगा हाराद्याभरणा सुरेन्द्रविनुता शृंगा
रपीठालया। योन्याकारकयोनिरुद्रतक
रा नव्यानवर्णात्मिका श्रीचक्र० १०॥

लक्ष्मीलक्षणपूर्णभक्तवरदा, लीलावि
नोदस्थिता, लाक्षारंजितपादपद्मयुगला
ब्रह्मादिसंसेविता। लोकालोकितलोक
कामजननी, लोकत्रयैकाश्रया, श्रीचक्र
२। ॥ ह्रींकाराङ्कितशंकरप्रियतनु, श्रीयो
ग- गपीठेश्वरी मांगल्यायुतपंकजाभनयना,
६ मांगल्यसिद्धिप्रदा। तारुण्यातपसार्चिता

तहर्णिका, तन्त्रोत्तमा तंत्रिता, श्रीचक्र॰
१२ ॥ सर्वशास्त्रविहारिणी सकलगा, स
र्वेश्वरी सर्वगा, सत्या सर्वमयी सहस्र
दलगा, सप्तार्णवसंस्थिता। सांगा सां
गविवर्जिता सुखकरी, बालार्ककोटिप्र
भा, श्रीचक्र॰ १३ कादिज्ञानसुवर्ण

बिंदुस्थतनुः, स्वर्णादिसिंहासना, नाना
रत्नविचित्रचित्ररचिता, चानुर्यचिन्ता
मणिः। चिज्ञानन्दविधायिनी सुविपु
ला, कोटित्रयेशाम्बिका श्रीचक्र०॥
रा १८॥ लक्ष्मीवाण्यादिविरिञ्चिचन्द्रमुकुटा,
७ याष्टाङ्कपीठार्चिता, सूर्येन्द्वग्निमयैक

पीठनिलया, चिन्मात्रकोशेश्वरी। गो
ष्ठी गुर्विनगर्विता गगनगा, गंगा गणे
शप्रिया, श्रीचक्र॰ १५ ह्रींकारात्रय
रूपिणी समथिनी, संसारिणी ह्रस्विनी
हंसिनी वामाचारपरायणा समुकुटा,
बीजावती मुद्रिणी। कामाक्षी करुणा

12

विचित्रचरिता श्रीश्रीत्रिमूर्त्यात्मिका,

श्रीचक्र. १६॥ तां बिंबप्रति बिंबल

ब्धितलसद्विंबाधरामम्बिकां, जम्बी

रोत्पलकर्णसंभितमुखीं जम्बाफल

श्रीकचाम्। ताराभां मधुमांसदत्त

बलिभिः प्रत्यक्षदीक्षात्मिकां सौभाग्यं

सरसुन्दरीं भगवतीं देवीं भजे सुन्दरीम्॥ १८

तिस्रो कोटिसुवर्णपात्ररचितं संसारिणीं

हंसिनीं वामाचारपरायणां सकुलां

ज्ञां बीजावतीं मन्दिनीम्। वामाद्या क

रुणां विचित्ररचितां श्रीश्रीत्रिमूर्त्या

त्मिकां श्रीचक्र० इति राजराजेश्वरीस्तोत्रं

